# अथ अनिङ्ग्य प्रकरणम् ७

मुनिमानसमन्थानमथितागमसागरात्
उदिताय नमो भूयादमृताय मुरारये १
गुणत्रय विहीनाय जगत्त्रयविधायिने
श्रुतित्रयदृशे शश्वत्पुरत्रयमथे नमः २
नमस्कृत्य विनेतारम् विघ्नानामनुशिष्यते
अनिङ्ग्यमिङ्ग्यसादृश्याद्यत्सन्देहास्पदम् पदम् ३
श्रुतिश्रुच्छब्दनिर्दिष्टम् विकृतं चापदात्मकैः
स्यादनन्यवदन्काराद्यकारादि च यत्पदम् ४
भिर्भ्याम्भ्यस्सुभिर्वागोभावं ह्रस्वभागदीर्घं च
नित्यं विहाय नेङ्ग्यं गोगीस्सुरदुन्दु चेति भिश्श्रुत्या ५
अर्वाक्सर्वं षुणा तद्वत्स्यादिस्माद्यक्षरैरवि
वैकारादि पदम् वैष्णा वैश्वायुक्सासहादि च ६
सौकारादि सपर्यादि नीयवीयामयादि च
त्रैकारादि कुकारादि नसोगोपोयुतम् विना ७
अरात्यादि च वावादि जशब्दायुक् प्रथादि च
धूर्वातिष्ठादिकम् पष्ठौ तुर्यौ दित्यौ व्यथादि च ८
ईदुपाद्यक्षरन्तच्चेदेकव्यञ्जनमध्यगम्
मेघशीकादिशब्दौ च वर्जयित्वा द्वितीयकौ ९
मामादि चैकतायादि त्रिकमीदृङ्ङिति त्रयम्
प्रत्नथादि चतुष्कं चेदृशायादि चतुश्श्रुतिः १०

रुद्रेषु च द्वितीयादिष्वष्टस्वनुपसर्गयुक्
भवे मते कराय न्ये तीक्ष्णगो पूर्व वास्त्वयुक् ११
अपञ्चषाक्षरश्शब्दः निषासूसस्सहादयः
नीप्यायुधाशवासीनावट्यावार्यादि शब्दवत् १२
ईङ्कारादावीमवापोपसन्न्युद्विप्रायुग्या सा श्रुतिः प्रोथते च
ऊर्ध्वे पक्षे दत्वतादावदादिर्हित्वाऽरेतस्काय चाप्राणते च १३
एकाक्षराद्यदित्पूर्वं मानमाणश्रुदन्तकम्
बहिश्शतोपसर्गयुक् विना सात्मानमित्यपि १४
शृतन्दशपुरोदक्षस्वगात्वदुपसर्गयुक्
विहाय तारशब्दान्तं तथान्तव्यश्रुदन्तकम् १५
सुप्रायुग्वांसशब्दान्तमसुयुक्ची श्रुदन्तकम्
घृतान्ताविष्ठयन्तान्तशब्दावनुपसर्गकौ १६
निस्संव्युक्थेर्मवीरासः पूर्णायुक् त्रिचतुस्स्वरम्
एतैकाद्यपि वाऽसोन्तम् तथायांसश्रुदन्तकम् १७
स्तान्मस्यन्तम् स्वतस्वन्तष्मतष्मन्तश्रुदन्तकम्
त्वतत्वन्तष्यतष्यन्त श्रुदन्तं नोपसर्गयुक् १८
तवै तवे महै महे महिध्वमन्तकं तथा
उकश्रुदन्तकं यदप्यभावुकोपसर्गयुक् १९
प्राङ्वागयुगगागङ्ङाङन्तम् चेन्नचतुस्स्वरम्
त्वान् षाडन्तम्सषोपेत वीवद्वान्मान्मदन्तकम् २०
चीनाञ्चाञ्चस्विनान्तश्रुत्त्वान्तम्मह्यभियुग्विना

अपि द्वादिश्च संख्याश्रुद्विहाय परनिप्रयुक् २१
अग्रे भागा भगश्रुद्गिरिहरिसमनीकोर्जभद्राद्रिवृत्रा
ऽऽवर्तिन्नाशाशुरफ्शिन्नुदसधसहसा धूस्स्वधातानरूप
देवत्वन्दानवोवाडुरुपुरुमहसो वाजिनी वाजविश्व
श्रुज्जातश्रुद्वसावस्वृतघृतशतगात्वग्निमित्र त्रिलोक २२
पते मते शुचिशिपिसत्यचक्षणाक्षपीतयो रयिरिशचंद्रचारिणि
भवो दुघेऽध्वरमघयज्ञवाहनप्रणीतयो हुततमतिग्मनिप्रनिः २३
एभिर्युक्तं ह्रस्वभाग्युग्बहुस्वर्योदूदन्तं देवताद्वन्द्वकं च
हित्वा सर्वं नीचमन्यस्वरं चेन्नीचन्तच्चाप्येवमेवोहनीयम् २४
इति परिभाषा
अथानमित्रान्यतराम्बरीष श्रुतोऽवधिष्माश्वतरोऽनवद्यम्
अवाकयाङ्काङ्कमसूषुदन्तावयातवीयानवतादवध्यम् १
अपस्पृधेथामपथागृहीतश्रुदभ्यसेतामरपा अरेपाः
अपिप्रयं चाप्सरसश्रुदस्यस्यपस्युवोऽनुल्बणमस्रवन्तीम् २
अवत्तशब्दोऽपशवोऽपशव्यश्रुदश्वकोऽदिद्युतदप्नवानः
अपद्यमानान्तरतोऽपवित्रावपारमन्वीपमपेशसे च ३
अनुष्ठुयाऽनिष्टृतोऽनिष्टकेऽभिष्टीरभिष्टयेऽभीरवोऽभीपतोऽभित्यै
अनेनसाऽनेहसानागसावर्तिश्रुतोऽरपोऽरेपसावन्यथाङ्गुष्ठं ४
अलजोऽतीकाशाच्छावाक श्रुदवोचामाजुष्टानिष्टाः
अहभ्रूनोऽवाशृङ्गोऽनाश्वानदद्द□हन्तानड्वाहश्रुत् ५
अजगरशब्दोऽवद्यादरमतिरपुवायतेऽपुवायेत

अपशुरकूपारस्यानाशीर्केणान्यकेषाञ्च ६
अरेषतावरावटश्रुतावपूपमंकुपम्
अरेणवोऽवकावृकावसापसश्रुतोऽगदम् ७
अहिंसन्तमसुन्वन्तमदित्सन्तमयाचितम्
अनवारमनर्वाणं अथर्वाणोऽतिथिश्रुतिः ८
अध्वर्यन्तोऽन्तमायक्ष्मायस्मयामीवशब्दवत्
अध्वर्युश्रुदभीकेतोध्यक्षिताङ्घारिशब्दवत् ९
अजरेभिरनीजानमवमा चावमोऽवमम्
अच्छलाभिरभीशूनामश्ञुवीताशमन्त च १०
अपीच्योऽस्रीविरन्यासाम् अनशन्यपरीषु च
अवारेऽप्रवतावातोऽविताश्रुदणवोऽधमम् ११
आत्मा मुष्यायणार्षेया मिक्षा ग्नेया युषश्श्रुतिः
आमाण्डा जिश्श्रुदाट्णार आरण्या दित्य शब्दवत् १२
आप्ता जीगर्ति मार्तश्श्रुद्विनार्तोरार्तवश्रुतिः
आप्यानामाश्विनाश्वत्थ श्रुतावास्पात्रमाप्स्यथ १३
आविथाथर्वणश्चाख आखुरातित्थ्यशब्दवत्
आविन्नावश्रुदाशूनाम् आशाद्याज्यात्तशब्दवत् १४
आव्यमान्त्यायनश्चायन्ननन्तोदात्तमासनि
आसन्यादानशानाश्चाशितिम्ने चाश्यमाशुया १५
आम्बानामाहुवध्यै चासामहै चाभुराक्षिषुः
आङ्गिरस्यान्तरिक्षश्चाशुषाणा आशुशुक्षणिः १६

आनृहुरानृचुरापयितायोरायिनमायव आयवसे च
आशित आशिरमासुर मारादानशुराग्रयणश्रुतिराच्छत् १७
आसन्द्येवादकामाविराग्नेन्द्रा इन्द्रियाव्यपि
इष्टर्ग इष्टकेलान्दश्रुदिदावथ्सरेण च १८
ईहेन्यश्रुदुदर्येणोदरोपस्त्युशिजश्रुतिः
उदारश्चोर्वरामुथ्समुदीचश्चोष्णिहाश्रुतिः १९
उपहत्नुमुपानहावुपाकेऽप्युपरिष्टादुपरेण चोत्तरेद्युः
उभयाददुदङ्क उद्रिणञ्चोभयतश्चोदकमुद्यतेऽनुदात्तम् २०
उदितमुषासानक्तोलूखलमुच्चावचानुदावर्तः
उदित उदुम्बरशब्दोऽप्यूष्मण्योर्णायुमूर्मिणीऋणधत् २१
ऋक्वतर्दूदरेणर्तुस्थायज्ञायज्ञियेन च
ऋत्वियादृक्षमश्रुत् स्यादृग्मियाण्यृत्विजश्रुतिः २२
ऋध्नवच्चैतशैतावदेतद्वेकादशश्रुतिः
ऐलबृदा ओजसीनौशिज औदुम्बरश्रुतिः २३
ककुहकनिक्रदशब्दौ कृदरङ्किकिदीवि काद्रवेय श्रुत्
ककुभिकरम्भ कपिञ्जलकर्मण्य श्रुत्कनानकाभ्यां च २४
कालका कलविङ्कश्च कार्ष्मर्यः कतमश्रुतिः
कसर्णीरः करिक्रच्च कत्कटः कर्वराणि च २५
कृत्वाय कृकवाकुश्च क्षुमन्तश्च क्षमाचराः
गोपं गोपौ तु गौपत्यं गायत्री गर्दभ श्रुतिः २६
गोलत्तिका गवीन्यौ गव्यूतिश्रुद्गविष्ठिरो गर्मुत्

गोपीथाय गमध्ये गोधूमा गोतमाश्च गिर्वणसे २७
गृह्ययेयाताम् ग्रुमुष्टिश्रुद्गोधा गोत्राणि गार्मुतम्
गर्गराणां गरुत्मांश्च घृणीवांश्च घनाघनः २८
चक्रवाकश्चिकितुषे चक्राणश्चैत्रियायणः
चिकित्नू चेकितानश्रुच्चुपुणीका चनोहितः २९
चराचरेभ्यश्चात्वाल चरित्र चरम श्रुतिः
चकृवान् जर्हृषाणश्च जर्भुराणा च जम्भयोः ३०
जनता जीवातु श्रुज्जमदग्निर्जामदग्नियौ जहका
जनिता जीमूतश्रुज्जनिमा जञ्जभ्यते जरित्रे च ३१
जुहुराणं जुजुषाणा ज्येष्ठ जरायु श्रुतौ जनित्रं च
जाम्बीलेन जनित्वैर्जायेन्यस्यापि जीवनस्यायै ३२
तत्त्वाय तावत श्रुत्तादृक् त्वष्टीमती तुविष्मणसम्
त्रेधा च तेतिजानस्ततृषाणस्तारकाश्च तनयित्नोः ३३
तुरण्यतस्तुरीप श्रुत् त्रसदस्युस्तमस्वरीः
तूपरत्वोतशब्दौ च त्रिष्टुभश्रुत्तरित्रतः ३४
दिद्युद्दुहितरशब्दः द्रविणस्युर्दृशीकवः
दूषीकाभिश्च देवाच्या दात्यौहश्च दविद्युतत् ३५
दर्विदा देविका देवताशब्दवत् द्राघुया दीधितिं दिदिविं दीदिवान्
द्वापरो दुष्टरन्दुष्टरीतुर्दृषद्द्युम्नदुर्यश्रुतिः दन्दशूकाश्रुतिः ३६
द्युतानो दधीचो दरिद्द्रद्द्वितीयश्रुतिर्धाणिका च ध्रजीमा□श्च
धेष्ठा

नराश□सशब्दो नवेदा नवग्वा नपात्को नपातंच नक्षत्रशब्दः ३७
नक्तोषासा नक्तया नव्यसेश्श्रुन्नाराश□सश्श्रुन्निदो नन्नमीति
नैयग्रोधो नानदन्नीत नृम्णश्श्रुन्नीवारा नाथितश्श्रुन्नभन्ताम् ३८
नीहारश्श्रुन्नहना नन्दथुना नीक्षणञ्च नीलङ्गोः
नीनिमनूतनशब्दौ नैवारश्श्रुन्निलायत न्यङ्कुः ३९
निष्कावं निष्कासे निष्केवल्यं निषङ्गथिर्नीविः
निष्टक्र्यं निष्ट्याय न्यग्रोधश्श्रुन्नरन्धिषश्श्रुच्च ४०
पृत्सुतीः पुरितता पृतन्यतः प्रुष्णते पृषतयः परिष्कृतः
पत्वने परमतां पृतन्यवः पस्पशे च पतयिष्णु पायवः ४१
प्रउगं प्रयसः प्रजापतेरहृदयेनापि पितामहश्श्रुतिः
परमेष्ठी च पतत्त्रिणश्श्रुतिः पृतनाज्येषु च पुण्डरिस्रजाम् ४२
पतङ्गं पिशङ्गाश्श्रुतिः पार्वतेयी पराचः प्रतीचीश्श्रुतिः पाकलाय
पुरन्धिः पुरोडाशशब्दः परिष्टौ पृदाकुः पराके च पल्पूलनेन ४३
पर्यारि पर्यारिणी पार्यिष्णुश्श्रुतिः पौरुषेयश्श्रुतिः प्रावृषा पर्वतिः
प्रोषिष्यतेपि प्रतीपं प्रतीकश्श्रुतिः प्रावृतस्य श्श्रुतिः प्रासचाय ४४
प्रायश्चित्तिश्श्रुत्प्राकाशौ प्राशृङ्गश्श्रुत्पूर्वेद्युश्च
पूतुद्रुश्श्रुत्प्रश्नम्प्रच्छत्प्रत्नप्रत्तश्श्रुत्पड्बीशम् ४५
प्राणायनः पिशङ्गिला प्रावाहणिः पिलिप्पिला
प्रैयंगवं प्रियङ्गवः पावीरवी पवीरवम् ४६
प्रेमाणम्प्राणिने प्रेणा प्रेता पौतुद्रवश्श्रुतिः
पुरूरवाः परुच्छेपः परमश्श्रुत्प्रवत्वति ४७

प्रातः पुरोडाशिन्यश्च पार्याः पापीयसीश्रुतिः
पोषयित्नु च पीवानः पावकः पाजसा श्रुतिः ४८
प्राचः प्रक्षश्रुतिः प्लाक्षः फलिगं फलिनीश्रुतिः
बृहस्पतिश्रुतिस्तद्वद्बन्धुना बल्बजाश्रुतिः ४९
बार्हस्पत्यश्रुद्बलाकाबहिष्टाद्बम्भारिश्रुद्ब्राह्मणाच्छ□सिने च
बर्हिष्यश्रुद्बार्हतश्रुद्बलक्षीभातृव्यश्रुद्द्वेषजश्रुद्द्वरिभ्रत् ५०
भालन्दनो भरद्वाजो भुरण्युश्रुच्च भौवनः
भौवायनो भिषज्यन्तो भैषज्यमपि भामितः ५१
मालङ्गा मदिरा मुद्गा मान्दा मध्यमशब्दवत्
ममत्तु च मनीषाणां मुष्करा मारुतश्रुतिः ५२
मार्जालीय मनोतायै मरुत्वतीयश्रुतो मतस्नाभ्याम्
मध्यन्दिने मघोनी स्यान्माध्यन्दिनमातरिश्वशब्दौ च ५३
मिथुयामृडयन्तश्रुन्मुमुचानामादयिष्णवो मद्गुः
महिमा मदिन्तमश्रुन्महिना मान्थीलवो मलिम्लश्रुत् ५४
मस्तिष्कश्रुन्मस्मसा मा□स्पचन्या मानव्यश्रुन्माहिनं
मादयद्ध्यै
युष्मानीतो यादृशे यातुजूनां यावद्यज्ञायज्ञियश्रुद्यवागूः ५५
यायावरो युनजते युवानं यजथश्रुतिः
योयुप्येत यजत्राश्रुद्युक्त्वायापि च यव्युधः ५६
रुक्मन्तं राधयिष्यामो राजन्यश्रुच्च रुक्मते
रैवतश्रुल्लप्सुदिनो लोपाशो लोमशश्रुतिः ५७

वत्सतरश्रुद्वरिवो वरिमा वसतीवरी वरूत्रिश्रुत्
विप्रविपश्चिच्छब्दौ विवेष वार्द्ध्राणसो वरत्राश्च ५८
वीडित वडबवनस्पति वानस्पत्यश्रुतो वसव्यश्रुत्
वासिष्ठश्च वनिष्ठुर्वस्यष्टिर्विष्टपं व्यचिष्ठं च ५९
वृषदंशो विदुषश्रुद्विषुणस्य विदीगयो विदानश्रुत्
विविदानो विदधश्रुद्विथुरा विश्पत्नियै विषूचश्रुत् ६०
वायव्यवैश्वानरवीर्य विद्या वासन्त वासन्तिक वार्षिकश्रुत्
वृत्वाय वल्मीक वराह शब्दौ वीथो वपा व्याघ्र वरीयसीश्रुत् ६१
वासवावंसगो वाहसो वायवो वस्यसीशब्दवद्वीरुधो वीरताम्
वाघतो वर्तिका विश्वतो विश्पतिश्रुच्च वाच्यायनो विश्ववीतश्रुतिः
६२
शुश्रूषेण्यां शिश्रियाणश्शरव्याशब्दौ शग्मां शारदश्रुच्छवर्तान्
श्रायन्तीयं शिंशुमारशिशमीवाञ्छब्दः शुन्ध्यूश्शम्बरस्य
शिवितिङ्गाः ६३
शकुन्तिकाशयण्डकश्रवस्यवश्च शुश्रुवान्
शिखण्डशैशिरश्रुतिश्शचीपतिश्च शित्पुटः ६४
शुनश्शेपं शुनासीरा शीर्षण्या शुष्मिणश्रुतिः
शौल्बायनश्शमयितोः शार्दूलाय च शुष्मयम् ६५
शौचेयश्शोशुचानश्च शिशानश्शरदश्श्रुतिः
शुभितं शरभं श्रैष्ठ्य श्रेष्ठ श्यामाकशब्दवत् ६६
शितानश्शुरुधश्श्वात्राश्शमित्रे शाक्वरश्रुतिः

शण्डाय षोडशश्रुच्च सुषाव समया स्वरिः ६७
स्वस्रीयस्स्वरणं सिन्धुस्स्वसारश्रुत्ससस्ति च
सनुतस्सनिता सख्यं सखायं सलिलश्रुतिः ६८
सचेरन्सूकरस्सूच्या सुतानां सुम्नयाश्रुतिः
सलावृकी सिनीवाली समान्यस्थावरश्रुतिः ६९
समना समने सम्यत्सोमेन्द्रं सानग सुवानश्रुत्
सृञ्जयान्सृमरस्सङ्गे सायुज्यं साधुया सिषासन्तीः ७०
सुषुपुषस्सुषुवाणं समावती स्वरुं सदस्य समुद्रियशब्दवत्
स्वदयिता च सनेमि सवीमनि स्थविमतस्सरिरस्य सनिष्यवः ७१
सत्रस्यर्द्ध्या सगरस्सुषिरस्वारसारङ्गशब्दाः
सब्दस्सुब्धान्सनवथ सकृथ्स्वाङ्कृतस्संस्कृतं च ७२
स्नावन्याभ्यां सवन सदन स्वादुशब्दास्सनीयान्
सर्णीकाय स्वदित सुवित स्वस्तिशब्दास्स्वपन्तम् ७३
साधारणं सर्दिगृदिं सभेयस्सालावृकेभ्यश्च सरीसृपेभ्यः
संस्कृत्य सुत्यास्तनयित्नुशब्दौ स्वात्तं समानत्र समस्य सङ्काः
७४
सावित्र साहन्त्य सपत्न सूनृताशब्दा हविष्यं च हलीक्ष्णशब्दवत्
हेमन्त होत्रीय हिरण्ययश्रुतो हैमन्तिकश्रुच्च हिकं हिरण्मयम् ७५
प्रपञ्चत्वादनिङ्ग्यानां दिङ्मात्रमिह सूचितम्
अतोऽनुक्तञ्च यत्किञ्चिदुन्नेयन्तन्मनीषिभिः ७६
एषामनिङ्ग्यपदानां पदवी सन्दर्शिता सुगता सुधिया

देवीमनीषिसुतेन श्रीवत्साङ्केन तैत्तिरीयाणाम् ७७

इति अनिङ्ग्यप्रकरणम् ७

सप्तलक्षणं समाप्तम्